नि चक्राणि शरीरं प्राप्य भ्रमन्ति ॥ पे ॥[1] प्रत्येकं सर्वाङ्गानि प्रगलन्तो दहन्ति पादतले चास्य शङ्कुभिर्भिद्यते । एवं गर्भोदकपर्वते । नाकोटिकैः प्राणिजातिभिः सातत्यकैः परमाणुशः प्रभक्ष्यते । भुक्तो भुक्तः पुनरपि संजायते सुकुमारतरः । सुकुमारतया भूयोऽप्यधिकतरां वेदनामनुभवति । भुक्तभुक्तस्य प्रभूततरमेवास्य मांसं प्रादुर्भवति । तस्य[2] प्राणातिपातकृतोपचितस्य तत्फलं भवति ॥

अदत्तादानविपाकमाह । स एव दुष्कृतकर्मान्तचारी ज्वालानलचक्रनिर्माणगन्धर्वनगरमृगतृष्णिकासदृशं महदर्थजातं पश्यति रत्नवस्त्रधनधान्यनिकरभूतं । तस्यैव लोभाभिभूतस्य कर्मणा मोहितस्यैवं भवति । ममेदमिति । स एवं मोहितः पापकारी प्रज्वलिताङ्गार[3]कर्षूर्लङ्घयित्वा तद्द्रविणमनुधावति । स कर्मकृतैर्यमपुरुषैर्गृह्यते [42 a] शस्त्रजालमध्यगतः सर्वाङ्गप्रत्यङ्गशः पाट्यते विशस्यते दह्यते ऽस्यावशेषः क्रियते । न चास्यानादिकालप्रवृत्तः स लोभस्तामप्यवस्थां गतस्य परिहीयत इति ॥

कामिमिथ्याचारमधिकृत्याह । एष स पापकर्ता तस्मात्कृत्स्नसङ्कटान्मुक्तः कथमप्यङ्गारकर्षूर्लङ्घयित्वा कर्मणा भ्रामितः प्रदेशमन्यं प्रपद्यते । चित्रदर्शनं नाम तत्र कर्मकृता स्त्रियः पश्यति या तेन पूर्वं नष्टस्मृतिना दृष्टा । दृष्ट्वा चानादिकालाभ्यस्तो रागाग्निरुत्पद्यते । स तेन धावति येन ताः स्त्रियः । ताश्चायोमय्यो नार्यः[5] कर्मकृताः । ताभिरसौ गृह्यते । गृहीत्वा चौष्ठात्प्रभृति तथा भुज्यते यथास्य सर्षपफलमात्रप्रमाणमपि नावशिष्टं तस्मिञ्शरीरे भवति । पुनरपि संभवति । पुनरपि भुज्यते । स कटुकां खरां वेदनामनुभवंस्तस्माद्रागाग्नेर्न निवर्तते । येन ताः स्त्रियस्तेन भूयः स संधावति । न चास्य तत्पीडा त-

1) The marg adds as a note here *punar jaya[n]te punar bhramanti*

2) Compare Divyāv 301 21 sqq

3) In the sense of fire' hitherto in lexx only

4) So MS.

5) Feer l. c. p. 202 Pañca-gati (in JPTS 1884) p 155, v 31.

पयास्य पुनरपि यमपुरुषाः[1] प्रादुर्भवन्ति मुद्गरासिपाणयः । ते तं पुरुषं मस्तकात्प्रभृति यावत्पादौ चूर्णयन्तीत्यादि ॥

पैशुन्यविपाकस्तु यथैव मृषावादस्य त्रीणि योजनशतानि जिह्वेति विशेषस्तु । तां यमपुरुषा निस्त्रिंशानादाय प्रदीप्तधारान् जिह्वां निकृन्तन्ति । अभ्युत्तिष्ठान्यस्मिन् प्रदेशे गद्यते । परमकटुकां वेदनां प्रतिवेदयते स क्रन्दति विक्रोशत्यत्यन्तमार्तः जिह्वाविरहित इत्यादि ॥

पारुष्यविपाकमाह । ते तां जिह्वामास्यं विदार्य गृह्णन्ति । गृहीत्वा निशितधारैः[2] शस्त्रैश्छित्त्वा तस्य भूय एव खादनोपायेन मुखे प्रक्षिपन्ति । स च विघसार्दितः क्षुत्क्षामवदनः स्वरुधिरलालापरिप्लुतां तामेव स्वजिह्वां भक्षयति । सा च जिह्वा छिन्ना पुनरपि तत्रागते कर्मवशात् । स च भूमौ वेदनार्तः परि[13 a]वर्तते विचेष्टते क्रन्दते । तस्यैवं वेदनार्तस्य परिवृत्तनयनतारकस्य दुःखार्तस्य दीनस्यासहायस्यकाशिनः स्वकृतमुपभुञ्जानस्य यमपुरुषा अनुशासनीगाथां भाषन्ते ॥

जिह्वाधनोर्विनिर्मुक्तास्तीक्ष्णा वाग्विशिखास्त्वया ।
पारुष्यमिति यद्दृष्टं तस्यैतत्फलमागतम् ॥ इति विस्तरः ॥

संभिन्नप्रलाप[3]विपाकमाह ॥ तस्य तत्प्रज्वलितं ताम्रमवलोहितं जिह्वां दहति । जिह्वां दग्ध्वा कण्ठं दहति । कण्ठं दग्ध्वा हृदयं दहति हृदयं दग्ध्वान्त्राणि दहति । तान्यपि दग्ध्वा पक्वाशयं दहति । पक्वाशयमपि दग्ध्वाधोभागेन निर्गच्छति ॥ यमपुरुषा गाथामाहुः ।

1) Cf Feer, l c. p 205.

2) *niçitairddhā°* MS

3) Tib ཚིག་འཁྱལ་བ (51 b 3) Pali *samphappalāpa* cf Dh -samgr § 56 and R Morris in *Academy* 25 Feb 1888.

पूर्वोत्तराविरूपं निर्यल्लालागमम्।
यत्रैव पतता प्रीतः तस्यैतत्फलमागतं॥
पानमत्तरती नित्यं न चाप्यन्नमतत्परा।
न सा शिक्षा बुधैर्दृष्टा सेवनं मांसशोणितम्' इति विस्तरः॥

अभिध्या[1]विपाकमाह। यत्र पश्यति हिरण्यं सुवर्णमारकूटं कर्मकृतं यत्किंचित् परपरिगृहीतं तस्य कर्मचोदितस्याभिध्याक्लिष्टस्यैवं भवति। ममेदं स्यादिति। ततः स नारकस्तेनैव धावति येन तद्द्रव्यं। तस्याभिध्यापरायणस्याकुशलस्याभिध्यायिनः कुशलविकलस्य तत्फलं पश्यतो नरके विपरीतं पश्यति। तस्यैवं पश्यतो ऽभिध्याकुलस्य हस्ते शस्त्रं प्रादुर्भवति स तेन धावति। तेषामप्यन्येषां नारकाणां हस्ते शस्त्राणि प्रादुर्भवन्ति। स तैः सह शस्त्रेण युध्यते धावतश्च कर्त्यते यथा सर्षपफल[2]मात्रमपि न भवति मांसस्य शरीरे तत्रास्थिकङ्कालावशेषः क्रियते॥ ये॥ परेषां सम्प---[3] [43 b]मम स्यादिति चिन्तितं। तस्याभिध्याप्रसृतस्य विपाकस्य फलनागममिति॥

व्यापादफलमाह। कर्मजाः सिंहव्याघ्रसर्पाः क्रोधाभिभूताः पुरतस्तिष्ठन्ते। एतेभ्यो भयभीतो येन वा तेन वा निष्पलायते *'न कथं शक्नोति पलायितुमनुगस्य कर्मणः।'* स तैर्गृह्यते। गृहीत्वा च पूर्वं तावन्मस्तकाद्भक्ष्यते यावत्पादतः सर्पैर्विषदंष्ट्रैः संदश्य संदश्य भक्ष्यते। व्याघ्रैरपि पृष्ठतो भक्ष्यते। पादावपि वह्निना दा[4][ह्येते]। स यमपुरुषैर्मुद्गरादिभिर्विध्यन इति विस्तरः॥

---

1) Hitherto in lexx only but *abhidhyālu* 'covetous' occurs in Divy 302 (supra cit.), *for which see the form below, abhidhyākhya*

2) *çarshapa*° MS

3) Three aksharas lost. From the Tib འབྱོར་པ (52 a 2) supply *sampad* or the like.

4) Obliterated in MS, but supplied from Tib (52 a 4) རྐང་པའི་མེས་བསྲེགས

मिथ्यादृष्टिफलं पुनरपरिमितं । पाठस्तु संक्षिप्यते । शस्त्रवर्षतोमरवर्षाशनि-पाषाणवर्षैर्हन्यते । एकादशभिरर्चिस्कन्धैः क्षुत्पिपासाग्निना च मुखनिर्गतेन निरन्तरं दह्यत इति ॥ काममूलाश्च सर्वानर्था इति तेभ्य एवोद्वेजितव्यं । यथात्रैवाह । अस्त्यग्निकुण्डो नाम नरकः । तत्र कतरेण कर्मणा सत्त्वा उपपद्यन्ते । येनाश्रमणेन श्रमणप्रतिज्ञेन गायमानस्य नृत्तगीतस्याभरणानां वा शब्दं श्रुत्वायोनिशो मनस्कारेणाक्षिप्तबुद्धिना तच्छ्रुत्वा हसितलडितक्रीडितान्यशुचि[1] मुक्तं ॥ पे॰ ॥ तत्र ते नारका अयोवर्षेण सर्वाङ्गप्रत्यङ्गशूलपर्यन्ते अङ्गारवर्षेण च पच्यन्ते दह्यन्त इत्यादि । एवं परदारगमनास्वादनस्मरणात्पदुमो[2] नाम नरकः पठ्यते स्वप्नान्तभूतस्मरणाच्च । तत्र ते नारकाः कुम्भिषु[3] पच्यन्ते । ते द्रोणिकायोमयैर्मुसलैर्हन्यन्त इति विस्तरः ॥

एवमप्सरसः प्रार्थनया ब्रह्मचर्यपरिणामनान्महापदुमो[4] नाम नरक उक्तः । तत्र क्षारन-[5]दीतरङ्गिणी नाम प्रवहति । तस्या नद्या यान्यस्थीनि ते पाषाणाः । यच्छे[41 a]वालं ते केशाः । यः पङ्कस्तन्मांसं । या आपः तत्क्वथितं ताम्रं । ये मत्स्यास्ते नारका इत्यादि ॥ एवं पुरुषस्य पुरुषेण सह मैथुनविप्रतिपत्तेः अप्रमेया अकारणा विशेषाः पठ्यन्ते । एवं शिशुभिः सह विप्रतिपत्तेः क्षारनद्यामुह्यमानान्दारकान्पश्यति । ते तं विलपन्ति । स तां नदीमवगाहते । तेषु बालकेषु तीव्रस्नेहप्रतिबन्धशोकदुःखवेगात् । एवं गोवडवाजेडका-दिषु प्रकृतिस्थानगः काममिथ्याचारः घोरतरविपाकः पठ्यते । तासामेव गोवडवादीनां तप्तायोमयीनां अनुशूलनिर्मितानां योनिमार्गेण स तिर्यक्कामसेवी प्रविशति । स तासा-

---

1) Çukram marg.

2) A quasi-Pali form, cf Suttanipāta p 124 s Other authorities (Feer, J As S XX. p 216) make Paduma a cold hell.

3) So MS Correct kumbheshu or °ishu? The Brahmans have a Kumbhipāka-hell

4) Cf. Dh -s. § 122

5) Name of a sāgara in Dh -s § 126.

कुरुते प्रदीप्ताङ्गारनिरन्तरपरिपूर्णे स्थाप्यते पच्यते बहूनि वर्षशतसहस्राणीति विस्तरेण द्रष्टव्यम् ॥

एवं शीलवतीष्वपि भिक्षुणीषु विप्रतिपत्त्या महानरकपातः पठ्यते । एवं स्वस्त्रीष्वप्ययोनिमार्गेण गच्छतः । एवं ब्रह्मचारिणीष्वपि परस्त्रीषु कन्यासु च धन्यासु । एवमुपासिकासु एवं गुरूणां पत्नीषु ज्ञातिशब्दमारिताषु च विप्रतिपत्तेः तीव्राण्यापायिकानि महानरकपतनानि पठ्यते ॥

सागरमतिसूत्रेऽप्याह[1] । इह ब्राह्मण एकत्यो ब्रह्मचारिणमात्मानं प्रतिजानीते । स नैव मातृग्रामेण सार्धं द्वयद्वयं समापद्यतेऽपि तु मातृग्रामं चक्षुषा रूपं निध्यायन् पश्यति । स तदा स्वादयति अध्यवस्यति अध्यवसाय तिष्ठति । अयमुच्यते ब्राह्मण ब्रह्मचारी संयुक्तो मैथुनेन धर्मेण न विसंयुक्तः । अपरिशुद्धं ब्रह्मचर्यं चरति ॥ एवं मातृग्रामेण सार्धं सञ्चारितं सचिलिकिलायमानस्य [44 b] चास्वादयत अपरिशुद्धं ब्रह्मचर्यमुक्तम् । एवं मातृग्रामस्य हास्यमास्वादयत । एवं तिरःकुड्यगतस्य[2] तिरोलुष्यगतस्य[3] वा मातृग्रामस्य नृत्तगीतादिशब्दमास्वादयतो मैथुनसंयोगमित्युक्तम् । एवं पञ्चकामगुणसमर्पितं परमवलोक्यास्वादयत ॥ एवं देवादिस्थानेषु ब्रह्मचर्यपरिणामनात्संयुक्तो मैथुनेन धर्मेण न विसंयुक्त इति ॥

यतश्चैते कामा एवं स्मरणप्रार्थनाविषयतामपि गता एवमनर्थकरास्तेनैव कामापवाद-सूत्रेऽभिहितम्[4] । निवारय भिक्षो चित्तं कामेभ्यः । सभयश्चैष मार्गः सप्रतिभयः सभयपथः सगहन उन्मार्गः कुमार्गो वेदनापथः असत्पुरुषसेवितः । नैष मार्गः सत्पुरुषसेवितः चित्त न त्वमेव चिन्तयसि । कस्मात् अल्पास्वादाः कामा उक्ता भगवता । बहुदुःखा बहूप

1) Not in Nanjio or K F

2) For the form cf Vyutp ... BR for the meaning the tale of Pyramus

3) For *lushya* (here = [illegible] ?) cf Divy p 614 note 14

4) Not in Nanjio or KF

ड्वा बहुपायासा । आदीनवोऽत्र भूयान् । रोगो भित्व कामा गण्ड शल्यमघमघमूला मिथवडिस मृत्युरनित्या कामास्तुच्छा मृषामोषधर्मिण स्वप्नोपमा कामा. । शिमप्येते बालोल्लापना ॥ पे ॥ यथा मृगाणा बन्धनाय कूट द्विजानां बन्धनाय जाल । मत्स्यानां बन्धनाय कुपिन[1] मर्कटानां बन्धनाय लेप[2] पतङ्गानां बन्धनायाग्निस्कन्ध[3] । एव कामा ॥ पे ॥ कामपर्येषणा चरतो दीर्घरात्र सिंहानां मुखे परिवर्तितस्यान्तो न प्रज्ञायते । यावद्द्वीपितवानां गवासनानां मुखे परिवर्तितस्यान्तो न प्रज्ञायते । यावन्मण्डूकानां सुता सर्पाणां मुखे परिवर्तितस्यान्तो न प्रज्ञायते । दीर्घरात्र कामान् प्रतिसेवमानानां चोरा इति कृत्वा गृहीतानां शिरश्छिद्यमानानामन्तो न प्रज्ञायते । पा[45 a]रदारिका पारिपन्थिका ग्रामघातका जनपदघातका यावद्गन्धिमोचका इति कृत्वा गृहीतानां शिरश्छिद्यमानानामन्तो न प्रज्ञायते । दुःख तीव्र खर कटुकमनुभूत रुधिर प्रस्यन्दित प्रघरित यच्चतुर्षु महासमुद्रेषूदकात्प्रभूततर ॥ पे ॥ कायो काय चक्रादीनव । अस्थिसघात स्नायुसबद्धो मासेनानुलिप्त चर्मया पर्यवनद्ध छव्या प्रतिच्छन्न छिद्रविच्छिद्र[4] कृमिसघनिषेवित सत्त्वानामनर्थक क्लेश कर्मणा वस्तु ॥ अस्मिन्काये विविधा आबाधा उत्पद्यन्ते । तद्यथा चक्षूरोग श्रोत्ररोगो पादर्शांसि पिटको भगन्दर ॥ पे ॥ कायिका सन्तापा कायिका दुःख । कायस्य शीर्णता भग्नता कुब्जता । खालित्य पालित्य वलिप्रचुरता । इन्द्रियाणा परिपाक परिभेद,

---

1) The form is new the meaning 'net' assigned to the by form *kupini* in Çabdak is confirmed by the context, and by the Tib རྒྱ

2) Tib རྫིང 'snare *Of the form in the text (which may also be read nepah)* I find no trace in lexx

3) Tib (53 b 6) ཕྱེམ་ལེབ་སྲེག་པའི་མེ་ཡི་དུད་པ 'smoke of fire for moths', but *patanga* (as B R show) specially connotes the meaning of a moth that burns itself (πυραυστης) so that some sort of naked flame must be meant cf Divy 444 5 (inf) and note at p 709

4) Not in lexx but cf Pali *vicchiddaka*

संस्काराणां प्रभङ्गिभावो जर्जरीभावः । यत्र मार्ष त्वं मुदितः प्रचरसि जुगुप्सनीयं कामं प्रतिषेवितुं ॥ पे ॥ का तव भिक्षो कामाशान्तिः । कामा हि त्वां प्रलोभयन्ति । कामैश्च त्वं प्रार्थितो मूर्च्छितो ऽध्यवसितो ऽध्यवसानमापन्नः । यदाहं परिनिर्वृतो भवामि । सर्वशोकार्दितो भवति । त्वं च कामान्प्रतिसेव्य विनिपातगतो भविष्यसि । यत्र ब्रह्मचरणादात्मानं परिशोचयिष्यसि ॥ यन्नं भिक्षो निवारय चित्तं कामेभ्य । अकालः कामपर्येषणायाः । कालोऽयं धर्मपर्येषणाया इति ॥

उग्रदत्तपरिपृच्छायामप्याह[1] । तेन काममिथ्याचारात्प्रतिविरतेन भवितव्यं स्वदारसंतुष्टेन परदारानभिलाषिणा स्त्रीनेत्राप्रेक्षिणा निर्विण्णमनसा । एकान्तदुःखाः कामा । इत्यभीक्ष्णं मनसिकारप्रयुक्तेन । यद्यप्यस्य स्वदारेषु का(45 b)मवितर्क उत्पद्येत । तदापि तेन स्वदारेष्वशुभानुदर्शिना उत्त्रस्तमनसा । क्लेशवशगतया कामाः प्रतिसेवितव्याः । न त्वध्यवसानविनिबद्धेन नित्यमनित्यानात्माशुचिसंज्ञिना । एवं चानेन स्मृतिरुपस्थाप्या । तथाहं करिष्यामि यथा संकल्पैरपि कामान्न परिभोक्ष्ये । कः पुनर्वादो द्वीन्द्रियसमापत्त्या वानङ्गविज्ञप्त्या वेति ॥

पुनरत्रैवाह । बोधिसत्त्वेन स्वभार्याया अन्तिके तिस्रः संज्ञा उत्पादयितव्याः । कतमास्तिस्रः । रतिक्रीडासहायिकैषा नैषा परलोकसहायिका । अन्नपानसहायिकैषा नैषा कर्मविपाकानुभवनसहायिका । सुखसहायिकैषा नैषा दुःखसहायिका ॥ यावदपरास्तिस्रः । शीलान्तरायसंज्ञा ध्यानान्तरायसंज्ञा प्रज्ञान्तरायसंज्ञा ॥ अपरास्तिस्रः । चोरसंज्ञा वधकसंज्ञा नरकपालसंज्ञा इति ॥

चन्द्रोत्तरादारिकापरिपृच्छायामप्युक्तं[2] । अथ चन्द्रोत्तरा दारिका समनन्तर[3] प्रधावन्तं तं

1) Cf f 24a, supra and *Ugrapariprͦ* at 8a

2) A Candrottarādārika-vyākaraṇa is given in Nanjio, 441 (tr A D. 591) K F. p 256

3) °*tara*° MS

मन्हात्त ञाराय दृष्ट्वा तस्यां वेलायां विज्ञायसात्तरीते तालमात्रमभ्युद्गम्य स्थित्वा च त
मन्हात्तं ञनकाय गाथाभिरध्यभाषत ॥

[1] काय गमेत्तधर्मिम मनोज्ञ सुवर्णवर्णा ज्वलनप्रकाशम् ।
न रक्तचित्तस्य हि मानुषस्य प्रजायते शोभनक शरीरम् ॥
ये वर्षिकार्पूरगसप्रदीप्तान् त्यजन्ति कामान्विषरोषगूढा ।
षडिन्द्रिये संवरसंवृताश्च ये ब्रह्मचर्यं च चरन्ति शुद्धम् ॥
दृष्ट्वा च दारान् हि परस्य ये वै कुर्वन्ति माताभगिनीति सञ्ज्ञां ।
प्रासादिकास्ते हि सुदर्शनीया भवन्ति नित्यं परम मनोज्ञा ॥
स्पृहामिमां वेत्थ[2] पुरीं मत्सकाद्य यो रोमकूपाम्मम चातिगन्ध ।
न रागचित्तेन ममार्जितोऽयम् [46 b] फलं तु दानस्य दमस्य चेदम् ॥
न मे समुत्पद्यति रागचित्तं मा वीतरागासु करोथ रागं ।
साक्षी ममाय पुरतो मुनीन्द्रः सत्यं यथा वेद्मि न ज्ञातु मिथ्या ॥
यूयं च पूर्वं पितरो ममासं[3] अहं च युष्माकमभूज्जनित्री ।
भ्राता स्वसा चापि पिता श्वशूर को रागचित्तं जनयेदनार्या ॥
प्रघातिता प्राक् च ममात्र सर्वे अहं विशस्ता च पुरा भवद्भि ।
सर्वे घमित्रा वधका परस्य[4] कथं तु वा जायति रागचित्तम् ॥
न रूपवन्तो हि भवन्ति रागात् न रक्तचित्ता सुगतिं व्रजन्ति ।
न निर्वृतिं यान्ति च रक्तचित्ता रागो हि तस्मात्परिवर्जनीय ॥

1) Metre *Ākhyānakī*

2) MS apparently *vethe*

3) There is a fracture in the MS but apparently the reading is the form in the text In the previous line the MS reads *tvasaṭ*

4) °*rasparam* or °*yaram* MS

कामस्य हेतोर्निरयं पतन्ति । प्रेतास्तिरश्चोऽथ(1) भवन्ति रागात् ।
कुम्भाण्डयक्षा असुरा पिशाचा भवन्ति ये रागपरीतचित्ता ॥
काणाश्च खञ्जाश्च विजिह्मकाश्च । विरूपकाश्चैव भवन्ति रागात् ।
भवन्ति नानाविधदोषभाजश्चरन्ति ये कामचरीं जघन्याम् ॥
चक्रवर्तित्वमवाप्नुवन्ति । भवन्ति शक्रास्त्रिदशेश्वराश्च ।
ब्रह्माण ईशा वशवर्तिनश्च तद्ब्रह्मचर्यं विपुलं चरित्वा ॥
जात्यन्धभावा बधिरा विसंज्ञा । शूकरोष्ट्रा खरवानराश्च ।
हस्त्यश्वगोव्याघ्रपतङ्गमना(2) भवन्ति नित्यं खलु कामलोला ।
नित्येश्वराश्चैव भवन्त्युदग्रा सुवेष्टिनो वै गृहपत्यमात्या ।
सुखसौमनस्येन च यान्ति वृद्धिं ये ब्रह्मचर्यं विपुलं चरन्ति ॥
कशाछितापानथ धूपगारान्(3) बन्धांस्तथा ताडनतर्जनाश्च ।
छेदं शिरः कर्णकराङ्घ्रिनासा(4) । पारस्य चार्छन्ति हि कामदासा । इति ॥
॥ (5)उदयनवत्सराजपरिपृच्छायां च विवर्णिता कामा ॥ ॥
(6)दृष्ट्वा व्रणं धावति मक्षिका यथा(7) ।
दृष्ट्वाशुचिं धावति गर्दभो यथा ।
श्वानश्च सूना [46 b] इव मांसकारणात् ।
तथैव धावन्त्यबुधा स्त्रियै रता ॥

---

1) So the MS for tiryañco (not metrically possible), should we read the fem tiraçcyo?

2) °lohitāh (contra metrum) MS.

3) Dhuparagan corrected in a much later hand to dhumagaran MS ཏུ་བས་བདུག Tib Perhaps some torture by suffocation is intended On kabhalli (?) see Addenda.

4) °sa, MS

5) Translated into Chinese before A D 316 Nanjio, 23 & F 217

6) Metre Upajati Vanam MS

7) °makshikera MS

अविद्यापिधिना चान्तस्तमस्कान्धने[1] ह्यावृता ।
स्त्रीषु मत्तास्तथा मूढा अमेध्य इव वायसा ॥
नारस्य गोचरो ह्येष प्रस्थिता येन दुर्गति ।
आस्वादसञ्ज्ञिनो मूढा गीटस्थाने यथा क्रिमि ॥
मीढकुम्भो यथा चित्रो यत्र यत्रैव दृश्यते ।
पूर्णो मूत्रपुरीषेण दृतिर्वा वातपूरिता ॥
सिङ्घाणकफलालाला श्लेष्माणि[2] चान्तरास्तरा ।
दौर्गन्ध्य स्रवते कायाद्वकानां[3] तथा मधु ॥
अस्थिपूर्ण गुदद्वार मांसचर्मादिभिश्चित ।
गण्डभूतो ह्ययं कायः कुत्सितो ह्यामगन्धिक ॥
नानाप्राणिभि सम्पूर्णो मूढगण्डो यथा भवेत् ।
एवमेव ह्ययं कायो विष्ठाद्यशुचिभाजनम् ॥
अन्त्रालीगुल[4] ह्युदर सनरक्तगुण्डुयाकुल ।
वृक्को विलोहित पित्त मस्तलुङ्गास्थिमज्जकम् ॥
[5]अशीति क्रिमिकुलसहस्राणि यानि तिष्ठन्ति शरीरे ।
यथ बाला न पश्यन्ति मोहज्ञानेन आवृता ॥

---

1) °tamask° MS

2) ślmani MS

3) bak… is given in lexx as the name of the Jasmine and several other flowers

4) Thus I have emended the MS reading antr…ny antraguna…ly° The Tib (76 a 3) has simply, … 'The belly is full of the twisted gut' In the next line, vrdk… MS …lohita for lohit… (…)

5) This word spoils the metre, but I preserve it as the Tib has … «8 lakhs»

रत्नप्रभानुदो प्रस्रवत्यशुचि पूतिगन्धिताम्।
यान्ता निमित्तं गृह्णन्ति वचने दर्शनेऽपि च ॥
उक्ता यथा भ्रान्ति यो देश सर्वकुत्सित ।
उच्चारगोचरा बालाः खेटसिङ्घाणभोजिन ॥
जुगुप्सनीये दृश्यन्ते व्रणो दृष्ट्वेव मक्षिका ।
गतास्वादयन्ते[1] स्वेदो गन्धो वायति कुत्सित ॥
कुर्वन्ति दुष्कृतं कर्म येन गच्छन्ति दुर्गतिम्।
स्त्रीगन्धागामिषेवन्तो स्त्रीना धर्मानिषेव्य च ॥
गत्वा अवीचिं दुष्प्रज्ञा दुष्करां विन्दन्ति वेदनां ।
उच्चार इव दुर्गन्धा स्त्रियो बुद्धै प्रकीर्तिता ॥
तस्माद्धीनस्य स्त्रीनाभि स्त्रीभिर्भवति सङ्गति ।
उच्चारभस्त्रा यो गृहबालाश्रयास निगच्छति ॥
यादृशं कुरुते कर्म तादृशं लभते फलम् ॥
तथात्रै[47 a]वाह ।

तदेवंरूपैर्दुष्प्रज्ञैर्विषयोपभोगै स्त्रीविरागमुपसङ्क्रान्तैर्न प्रभवन्ति श्रमणब्राह्मणेभ्यो दानं दातुं कृपणवनीपकयाचकेभ्यो ऽवशीकृता स्त्रीभि स्त्रीनिर्जिता स्त्रीनिगृहीता स्त्रीदासा । तेनैव स्त्रीप्रेम्णा तस्या एव पोषणाय न शक्नुवन्ति दानं दातुं शीलं च समादातुं । स तत्र रक्त समानं स्त्रीपरिभाषितानि सहते तर्जनावलोकननिर्भर्त्सनानि[2]पि सहते । स मातृग्रामेण तर्जित पुरुष ससीदति विषीदति सुखं चास्या अवलोकयति । कामहेतो कामनिदानं च वशगता भवति । अयं महाराज कामलोलुपस्य पुरुषस्योच्चारसुखपरमस्या शुचौ रतस्यासब्रह्मचारिणो दोष ॥ पे ॥

---

1) A new conjugational form. Tib. [illegible]

2) °bhatsa° MS

लपुत्रो वा कुलदुहिता वा जम्बूद्वीपकान्सर्वसत्त्वाञ्जीविताद्व्यपरोप्य सर्वस्वं हरेत्, यो वा ऽन्यो मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता बोधिसत्त्वस्य कुशलचित्तस्यान्तरायं कुर्यादन्तशस्तिर्यग्योनिगतस्याप्यालोपदानसहगतस्य कुशलमूलस्यान्तरायं कुर्यादयं ततो ऽसंख्येयतरं पापं प्रसवति। तत्कस्य हेतोः। बुद्धोत्पादसंजननकराणां स कुशलमूलानामन्तरायः स्थितो भवति। यः कश्चिन्मञ्जुश्रीः परकुलेषु बोधिसत्त्वस्येर्ष्यामात्सर्यं कुर्यात्तस्य तस्मिन्समये ततोनिदानं त्रीणि भयानि प्रतिकाङ्क्षितव्यानि। कतमानि त्रीणि। नरकोपपत्तिभयं जात्यन्धभयं प्रत्यन्तजन्मोपपत्तिभयं चेति[1]॥

पुनराह॥

यस्तस्य कुर्यात्पुरुषो ऽप्रियं वा भूतं ह्यभूतं च वदेदवर्णम्।
परुषं वदेत्संमुखमन्यथापि यस्तं क्षोभं च कुर्यात्पुनरस्य यो ऽपि॥
आत्मभावेन महता नरकेषु स दुर्गतिः।
उत्पद्यते विपन्नात्मा दुष्प्रज्ञा स[2] वेत्ति वेदनाम्॥
योजनानां शतं पञ्च जायते ऽस्य समुच्छ्रयः।
कोटीपरिवृतः शश्वद्भक्ष्यते च शुना भृशम्॥
पञ्चमूर्धसहस्राणि भवन्त्यस्यापवादिनः।
जिह्वानां च शताः[3] पञ्च भवन्त्येकैकमूर्धनि॥
एकैकस्यां जिह्वायां शताः पञ्च ज्वलन्मुखाः।
लाङ्गलानां वहन्त्यस्य वाचं भाषित्व पापिकाम्।

1) Cf Dh s § 134 and M. Vyutp 120 *janmo°* must accordingly be corrected, probably to *jano°* or *janapada°* Tib ཡུལ་མཐའ

2) *°so* MS

3) *çata*, masc pl ('selten und immer metrisch'-Böhtl ²) I find quoted with the noun in gen pl

प्रतापने[1] च पच्यन्ते तीव्रदुःखानलाकुले ।
उत्पीडां बोधिसत्त्वानां ये कुर्वन्ति ह्यसंवृताः ॥
तिर्यग्योनिं समापन्ना न तेषां भोति दुर्लभा ।
कल्पकोटिसहस्राणि शतानि नियुतानि च ॥
ततश्च्युता घोरविषा भोन्ति सर्पाः सुदारुणाः ।
क्षुत्पिपा[15 b]साभिभूताश्च कुर्वन्ति कर्म दारुणम् ॥
लब्ध्वापि भोजनपानं तृप्तिं नैवाधिगच्छति ।
ततश्च्युतो मनुष्येषु स[2]‥‥व्युपपद्यते ॥
जात्यन्धो भोति दुर्मेधा दुष्टचेता ह्यसंवृतः ।
आर्यानाराधिका[3] वाचमुक्त्वा दुर्भाषितं नरः ॥
मनुष्येभ्यश्च्युतश्चापि पुनर्गच्छति दुर्गतिम् ।
कल्पकोटिसहस्रेषु जातु बुद्धं न पश्यति ॥

पुनरत्रैवाह । यावन्ति मञ्जुश्रीर्बोधिसत्त्वो बोधिसत्त्वस्यान्तिके प्रतिघचित्तान्युत्पादयत्यवमन्यनाचित्तानि वा । तावतः कल्पान् महानरकेषु संनद्धव्यो वस्तव्यं मया महानरकेष्विति । न मञ्जुश्रीर्बोधिसत्त्वोऽन्येन कर्मणा शक्यो विनिपातयितुमन्यत्र बोधिसत्त्वापवादादेव । तद्यथा मञ्जुश्रीर्वज्रमणिरत्नं नान्येन काष्ठेन लोष्टेन वा शक्यं भेत्तुमन्यत्र वज्रात् । एवमेव मञ्जुश्रीर्बोधिसत्त्वोऽन्येन कर्मणा न शक्यो विनिपातयितुमन्यत्र बोधिसत्त्वापवादादेवेति ॥ ॥

---

1) Name of a hell cf Feer, J As 1892 p 195

2) A syllable is wanting, qu supply a word meaning sickness (Tib ནད)?

3) The exact form is not certain owing to a fracture in the MS but the general sense, failing in honour to whom honour is due, is clear, cf the Tib འཕགས་པ་མཆོས་པར་མི་བྱེད་པ (57 b 6)

॥ आर्यश्रद्धाबलाधानावतारमुद्रासूत्रे[1]ऽप्याह ॥ ॥ यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा दशसु दिक्षु सर्वलोकधातुषु सर्वसत्त्वान्धकारेषु बन्धनागारे प्रवेशयेत् । यश्चान्यः कुलपुत्रो वा कुलदुहिता वा बोधिसत्त्वे क्रुद्धः पराङ्मुखस्तिष्ठेत् । नेमं दुरात्मानं पश्यामीत्ययं ततोऽसंख्येयतरं पापं प्रसवति ॥ अत्रैवोक्तं । यः कश्चिन्मञ्जुश्रीः सर्वजम्बुद्वीपकानां सत्त्वानां सर्वस्वं हरेद्यश्चान्यो यादृशं तादृशं बोधिसत्त्वं गर्हेत् ततोऽसंख्येयतरं पापं प्रसवति ॥ अत्रैवोक्तं । यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा गङ्गानदीवालिकासमान्स्तूपान्विनिपातयेद्दहेद्वा । यश्चान्यः कुलपुत्रो वा कुलदुहिता वा महा[18 b]यानाधिमुक्तस्य बोधिसत्त्वस्य व्यापादखिलक्रोधचित्तमुत्पाद्य आक्रोशयेत्परिभाषयेद्वा ततोऽसंख्येयतरं पापं प्रसवति । तत्कस्माद्धेतोः । बोधिसत्त्वनिर्याता हि बुद्धा भगवन्तो बुद्धनिर्याताश्च स्तूपाः सर्वसुखोपधानानि च सर्वदेवनिकायाश्च । बोधिसत्त्वमसत्कृत्य सर्वबुद्धा असत्कृता भवन्ति । बोधिसत्त्वं सत्कृत्य सर्वबुद्धाः सत्कृता भवन्ति । सर्वबुद्धानुत्तरया पूजया पूजयितुकामेन बोधिसत्त्वाः पूजयितव्याः ॥

एतत्पूजाविपाकश्च प्रशान्तविनिश्चयप्रातिहार्यसूत्रे[2]ऽभिहितः ॥

यस्त्वेषां कुरुते रक्षां धार्मिको धर्मवादिनां ।
छित्वा सुदुर्गतीः[3] सर्वाः शक्रो भवति देवराट् ॥
ब्रह्मापि यामस्तुषितो वशवर्ती[4] पुनः पुनः ।
मनुष्येषूपपन्नश्च चक्रवर्ती स जायते ॥

---

1) Nanjio, 90 KF 260 M Vyutp LXV 73

2) V ii 16 a supra

3) *sudurgati* seems not to occur but the Tib (58 b 3) gives it the same meaning as *durgati* viz disaster with the special sense of damnation (to hell) *Hita* of course from *hā*

4) Lalita vistara 465 ad fin

मैत्री गृहपतिश्चापि भवत्याश्रो महाधन ।
प्रज्ञास्मृतिभ्यां संयुक्तः सुपितो निरुपद्रव । इति ॥

अत्र रत्न बोधिसत्त्वमधिकृत्येयं वाराणपरा[?]िता । एवमन्यत्र ॥

यथोक्तं सद्धर्माधानावतारमुद्रासूत्रे । य श्चिन्मञ्जुश्री कुलपुत्रो वा कुलदुहिता वा सर्वलोकधातुरजोपमानां सत्त्वानां दिवसे दिवसे दिव्यं शतरसमाहारं दद्याद्दिव्यानि च वस्त्राण्येवं ददद्गङ्गानदीवालिकासमान्कल्पसमुद्रान्दानं दद्यात् । यश्चान्य कुलपुत्रो वा कुलदुहिता वा एकस्योपासकस्यान्यशास्तुर्दशकुशलकर्मपथसमन्वागतस्यैकदिवसमेकमाहारं दद्यादुद्दिश्य भगवतः शिनायां शिक्षित इति समारोप्य वक्तां अयं ततोऽसङ्ख्येयतरं पुण्यं प्रसवति ॥ य श्च[49 a]श्चिन्मञ्जुश्री कुलपुत्रो वा कुलदुहिता वा सर्वलोकधातुरजोपमानां दशकुशलकर्मपथसमन्वागतानां उपासकानां दिवसे दिवसे दिव्यं शतरसमाहारं दद्याद्दिव्यानि च वस्त्राण्येवं ददद्गङ्गानदीवालिकासमान्कल्पान्दद्यात् यश्चान्य कुलपुत्रो वा कुलदुहिता वा एकस्य भिक्षोरेकदिवसमाहारं दद्यात् । अयं ततोऽसङ्ख्येयतरं पुण्यं प्रसवतीति ॥

नियतानियतावतारमुद्रासूत्रेऽप्याह[1] । सचेन्मञ्जुश्रीर्दशसु दिक्षु सर्वलोकधातुषु सर्वसत्त्वा उत्पाटिताक्षा भवेयुः परिकल्पमुपादाय । अथ कश्चिदेव कुलपुत्रो वा कुलदुहिता वा तेषां सर्वसत्त्वानां मैत्रचित्तस्तान्यक्षीणि जनयेत् परिकल्पमुपादाय । यो वा यो मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा महायानाधिमुक्तं बोधिसत्त्वं प्रसन्नचित्तः पश्येद् । अयं ततोऽसङ्ख्येयतरं पुण्यं प्रसवति ॥ य श्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा दशसु दिक्षु सर्वसत्त्वान्बन्धनागारप्रविष्टान् बन्धनागारान्मोचयित्वा चक्रवर्तिसुखे स्थापयेद्ब्रह्मसुखे वा । यो वा यो मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा महायानाधिमुक्तस्य प्रसन्नचित्तो दर्शनाभिलाषी भवेद्वर्णं चास्योदाहरेद् । अयं ततोऽसङ्ख्येयतरं पुण्यं प्रसवतीति ॥

1) See p. 7 1 above

तथा तिथिमांसूत्रेऽप्याह[1]। य पुनर्भदन्त भगवन् क्षत्रियकल्याणो वामात्यकल्याणो वा गृहपतिकल्याणो वा श्रमणकल्याणो वा ब्राह्मणकल्याणो वा परं रक्षत्यात्मानं रक्षति परलोकं रक्षति। भगवच्छासने पात्रभूतमपात्रभूतं वा काषायकण्ठं कायगतम्(19 b)आरक्षं परिरक्षति गोप्स्यति पूजयिष्यति श्रावकयानं एवं प्रत्येकबुद्धयानं गोप्स्यति पूजयिष्यति। महायानं तथा च महायानसंप्रस्थितान् पुद्गलान् शीलवतो गुणाढ्यान् युक्तमुक्तप्रतिभानान्[2] तैः सार्धं रमति क्रीडति परिपृच्छति परिप्रश्नयति[3] तेषां श्रोतव्यं कर्तव्यं मन्यते॥ पे॥ चिरगतं[4] भगवन् पापं क्षपयिष्यति॥ भगवानाह। तत्रापि नाम कुलपुत्र कश्चित्पुरुष उत्पद्यते। यः सर्वं जम्बूद्वीपं सप्तरत्नपरिपूर्णं कृत्वा तिष्ठतो बुद्धानां भगवतां दानं दद्यात्तथैव मध्याह्नसमये तथैव सायाह्नसमये दानं दद्यादनेन पर्यायेण वर्षशतसहस्रमेवरूपं दानं दद्यात्। तत्किं मन्यसे कुलपुत्रापि नु स पुरुषो बहु पुण्यं प्रसवेत्॥ आह। बहु भदन्त भगवन्स पुरुषः पुण्यस्कन्धं प्रसवेदप्रमेयमसंख्येयं। न तस्य पुण्यस्कन्धस्य केनचित्संख्या प्रमाणमुद्ग्रहीतुं अन्यत्र[5] तथागतेन॥ भगवानाह। यस्तु कुलपुत्र क्षत्रियकल्याणो वा यावद्यथा पूर्वोक्तं। पे। स बहुतरं पुण्यं प्रसवति। यावदप्रमेयतरमप्रमाणतरमसंख्येयतरं पुण्यस्कन्धं प्रसवति। यो मम पश्चिमायां पञ्चशत्यां[6] वर्तमानायां सद्धर्मनेत्रीं रक्षति स रक्षत्यात्मानं। रक्षति परांश्च रक्षति परलोकं रक्षति मम शासनं श्रावकान् पात्रभूतानपात्रभूतान्वा याव

---

1) See p 13 7

2) *muktamuktapr°* MS, but see Divy 329 a et al

3) Pali *paripañhati* 'consider' (Ch) No compounds of the Sk denom *praçnayati* have hitherto been registered

4) Here the MS (not the Transcript) inserts a form *sal etukam* not, apparently, reproduced in the Tib (59 b 5)

5) The instrum as in Pali, instead of the abl of class Sk

6) *pañcāśatyām* MS, cf. Vajracchedikā VI, and Prof Max Müller's note to his translation (S B E vol 49 pt 2 p 115) The correction of 'fifty' to 'five hundred' is supported by the Tib here and below [50 a]

न्युत्पन्नान् कायावस्थाप्रावृतानपि रक्षति । न विहेठयति । यावत्स्वकं राष्ट्रं परराष्ट्रं च वर्धयति । अपायान् त्यजति । सुगतिं च प्रापयति चिरं चायुः पालयति । स्वलोकांश्च परलोकांश्च साधयति[1] । संबोधिमार्गे षट्पारमिता[50 a]श्चोपस्तम्भयति । सर्वापायाद्रक्षति । न चिरं संसारे संसरति । नित्यं कल्याणमित्रैर्बुद्धैश्च भगवद्भिर्बोधिसत्त्वैश्च महासत्त्वैश्च सार्द्धं समवधानगतो भवति । सततं कल्याणमित्राविरहितो न चिरेण यथाभिप्रायेषु बुद्धक्षेत्रेष्वनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते ॥ अथ तावदेव सर्वदेवेन्द्राः सपरिवाराः । यावत्पिशाचेन्द्राः सपरिवारा उत्थायासनाद्येन भगवांस्तेनाञ्जलिं प्रणम्यैवमाहुः । ये ते भदन्त भगवन् एतर्ह्यनागतेऽध्वनि यावत्पश्चिमायां पञ्चशत्यां[2] क्षत्रियकल्याणा भवन्ति यावद्गृहपतिकल्याणाः । पे । एवं सद्धर्मरक्षका एवं त्रिरत्नवंशानुपालयितारः । पे । वयमपि सर्वे सपरिवारास्तं क्षत्रियकल्याणं यावद्गृहपतिकल्याणं दशभिराकारै रक्षिष्यामः परिपालयिष्यामो वर्धयिष्यामः ॥ कतमैर्दशभिः । आयुश्चास्य वर्धयिष्यामः आयुरन्तरायं च धर्मेण निवारयिष्यामः । आरोग्यं च परिवारं च धनस्कन्धं च उपभोगपरिभोगं चैश्वर्यं च यशः कल्याणमित्राणि प्रज्ञासम्पदं च वर्धयिष्यामः । एभिर्दशभिरिति विस्तरः ॥

एवमभूमिप्रविष्टेष्वेवायं विपाकविस्तरो द्रष्टव्यः ॥

अवलोकनासूत्रेऽपि[3] ।

सबोधौ चित्तमुत्पाद्य हितार्थं सर्वप्राणिनाम् ।
यः स्तूपं लोकनाथस्य करोतीह प्रदक्षिणम् ॥

---

1) MS pr m [illegible] supra

2) *pañcā°* MS See note 6 above

3) These stanzas occur (with considerable variants) in the second of the sūtras called Avalo*kita* in the Mahāvastu See Senart's text II 362 17—18 and 369 2—3 To this reference I was led by Prof S d'Oldenburg, who referred me to his art in JRAS for 1893 p 340, where another quotation from this sutra in the present work (Ch 17) is noted Compare also the work of the same Tib name in K F 259.

इत्याद्युक्त्वा विस्तरमुक्तवान् ।

यस्त्वेषां बुद्धपुत्राणां नरः कुर्वीत विप्रियं ।

देवान्मनुष्यांस्त्यक्त्वा नरकं तस्य गोचरः ॥

इति विस्तरः पूर्ववत् ॥ न चात्र विशेषहेतुः कश्चिदुपदर्शयितुं शक्यत इत्यलं विस्तरेण ॥

कर्मावरणविशुद्धिसूत्रे[1]ऽप्यावरणपञ्चके[2]नाय[50 b]र्थ उक्तः । आवरणं मञ्जुश्रीरुच्यते राग आवरणं द्वेष आवरणं मोह आवरणं दानमावरणं शीलक्षान्तिवीर्यध्यानप्रज्ञा आवरणं । पे । तत्कस्य हेतोः । बालपृथग्जना मञ्जुश्रीर्दानं ददतो मत्सरिणामन्तिकेऽप्रसादं कुर्वन्ति । ते तेनाप्रसादेन प्रतिघचित्तमुत्पादयन्ति । प्रतिघविपाकदोषेण महानरकेषूपपद्यन्ते । शीलं रक्षन्तो दुःशीलान् कुत्सयन्ति परिभाषन्ते । ते तेषामवर्णं च भाषन्ते । ते तेषां दोषमुखा बहुजनस्याप्रसादं कुर्वन्ति । ते तेनाप्रसादेन दुर्गतिगामिनो भवन्ति । ते क्षान्तिं भावयन्तः क्षान्तिवादेनात्मानमुत्कर्षयन्ति प्रार्थयन्ति । वयं क्षान्तिवादिनः । इमे पुनरन्ये व्यापन्नचित्ताः । तेषां क्षान्तिमदमत्तानां प्रमादमूलकानि दुःखान्युत्पद्यन्ते । ते वीर्यमारभमाणा आत्मानमुत्कर्षयन्ति[3] परान् पंसयन्ति[3] । कुसीदा इमे भिक्षवो निरुत्साहा अनभियुक्ताः श्रद्धादेयं परिभुञ्जानाः । नैतेऽर्हन्ति पानीयस्थालकमपि । ते तेन वीर्यारम्भेणात्मानमुत्कर्षयन्ति परांश्च पंसयन्ति । तानन्ये बालानिति वदन्ति । ते ध्यानं समापद्यमानास्तत्र ध्यानसमापत्तौ स्पृहामुत्पादयन्ति । तेषामेव भवति । वयं समाधिविहारिणः । इमेऽन्ये भिक्षवो विक्षिप्तचित्ता विहरन्ति । कुतस्ते बुद्धा भविष्यन्तीति विस्तरः ॥

सर्वधर्माप्रवृत्तिनिर्देशे[4]ऽप्याह । बोधिसत्त्व आपत्त्या चोदयति । दूरीभवति बोधेः । य

1) Nanjio 1094 tr before A D 431 K F ?62

2) Five *avaranas* are mentioned in the Tevijja sutta (Digha n I xiii 30). Cf Rhys Davids in SBE vol XI p 182

3) These words in margin a sec manu

4) Nanjio 163 164 (tr before A D 417) 1015 K F 256 M Vyutp LXV 37 where as in our text the title is °dharmapra° (not °apr as Nanjio & Feer) Cp f 4 b (p 8 16) above where the a is to be restored

र्मावरणं च परिगृह्णाति । ईर्ष्यया[1] चोदयति । दूरीभवति बोधेः । ईर्ष्यापथेन चोदयति दूरीभवति बोधेः । सचेद्बोधिसत्त्वस्यान्तिके हीनसंज्ञामुत्पादयति आत्मनि चोद्धारसंज्ञां क्षिणोत्यात्मानं [51 a] कर्मावरणं च गृह्णाति । इह बोधिसत्त्वेन बोधिसत्त्वमववदतानुशासता वा शास्तृसंज्ञामुपस्थाप्याववदितव्यो ऽनुशासितव्यः । बोधिसत्त्वेन बोधिसत्त्वस्यान्तिके न परिभवचित्तमुत्पादयितव्यं । सचेदस्यापरित्यक्ता बोधिः । न देवपुत्र बोधिसत्त्व आचिरेण कुशलमूलानि समुच्छिनत्ति । यथा द्वितीयं बोधिसत्त्वमागम्येति । अनुत्पादितबोधिचित्ते ऽपि तावद्बोधिभव्ये सत्त्वे ऽवमन्यना प्रतिषिद्धा । किं पुनरुत्पन्नबोधिचित्ते ॥

यथोक्तं शूरङ्गमसमाधिसूत्रे[2] । तत्र दृढमते कतमदनुत्पादितबोधिचित्तव्याकरणं ॥ इह दृढमते स पुद्गलः पाञ्चगतिके[3] संसारे उपपन्नो भवति । यदि वा निरयेषु यदि वा तिर्यग्योनौ यदि वा यमलोके यदि वा देवेषु यदि वा मनुष्येषु । स च पुद्गलस्तीक्ष्णेन्द्रियो भवति । उदाराधिमुक्तिकश्च । तमेनं तथागतः प्रजानाति । अयं पुरुषपुद्गलो यावद्भिर्वा कल्पकोटीनियुतशतसहस्रैरनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयिष्यति ॥ पे ॥ इयद्भिश्चास्य पश्चात्कल्पशतसहस्रैर्बोधिमभिसंभोत्स्यते ॥ पे ॥ इदं दृढमते उच्यते । बोधिसत्त्वस्यानुत्पादितबोधिचित्तव्याकरणं । अथ खल्वायुष्मान्महाकाश्यपो भगवन्तमेतदवोचत् । अद्याग्रेणास्माभिर्भगवन्सर्वसत्त्वानामन्तिके शास्तृसंज्ञोत्पादयितव्या । तत्कस्य हेतोः । न ह्यस्माकमेतज्ज्ञानं प्रवर्त्तते । कतमस्य बोधिसत्त्वस्य बोधिपरिपाचकानीन्द्रियाणि संविद्यन्ते । कतमस्य न संविद्यन्ते । ततो वयं भगवन्नजानानास्तथारूपेषु हीनसंज्ञामुत्पादयेम । तेन

---

1) Beneath this word is added a sec. manu *carya*. This word appears to find its counterpart in the Tib. སྤྱོད་ལམ, which however occurs in the *next* clause, where *īryāpathena* occurs in our text.

2) Supr. p. 8 19.

3) B. & R. cite Vyutp. 90 (?).

वध क्षपयेत् ॥[1] भगवानाह। साधु साधु काश्यप सुभाषिता ते इयं वाक्। इदं च मया काश्यपार्थवशं स[51 b]म्पश्यमानेन युष्माकमेवं धर्मो देशितो। मा भिक्षवः पुद्गलेन पुद्गलः प्रविचेतव्य। यच्छीघ्रं[2] क्षण्यति हि भिक्षवः पुद्गल पुद्गल प्रविचिन्वन्। अहं वा पुद्गल प्रमिणुयां यो वा स्यान्मादृश। एतेन काश्यप निर्देशेन बोधिसत्वेन वा श्रावकेण वा सर्वसत्वानामन्तिके शास्तृसंज्ञोत्पादयितव्या। मात्र कश्चिद्बोधिसत्वयानिक पुद्गलो भवेत्तेन तत्रात्मा रक्षितव्य इति। यस्य तु नियतमेव बोधिप्राप्तिचिह्नमस्ति तत्र सुतरामनन्यथा रक्षितव्या ॥

यथोक्तमार्यसद्धर्मपुण्डरीकसूत्रे।[3]

इष्टामयान्मृत्तिकसंचितान्वा[4] प्रीताश्च[5] कुर्वन्ति जिनस्य स्तूपान्।
उद्दिश्य वा पांसुराशयो पि अटवीषु दुर्गेषु च कारयन्ति ॥
सिकतामया वा पुन कूट कृत्वा ये केचिदुद्दिश्य जिनान[6] स्तूपान्।
कुमारका क्रीडिषु तत्र तत्र।
ते सर्वि[7] बोधाय अभूषि लाभिन ॥

---

1) Passive with active inflection (Whitney § 774) here possibly due to Pali or Prakrit influence

2) The reading of the MS (broken here) appears to be *yat sidhram* or *yat sigham* The latter I have supposed to stand for *yat çighram*

3) MS W (see p 47, note 5 above) f 22 a 2 Kern, tr p 50

4) The metre is generally *Ākhyānakī* but with two irregularities common in Buddhistic poetry (1) the addition of a syllable at the end (making the metre in fact into *Vaṃçastha*) (2) the resolution of the initial long into two short syllables Compare the frequent anapaestic beginning in English 'blank verse'

5) *prītaḥ prak°* A

6) So W, *jinān* corrupted from *jināna* (cf infra) A

7) *capi* A, but see below

अनुपूर्व उत्पत्ति[1] हि बुद्धकोट्य ।
पेश्चा[52 a]अलिस्तत्र कृतापि स्तूपे ।
परिपूर्ण एकातलशक्तिका या ।
अोनामित शीर्ष भवेन्मुहूर्त ।
अोनामित[2] काय तथैकवार ।
नमोऽस्तु बुद्धाय कृतैकवार ।[6]
ये को तदा धातुधरेषु तेषु ।
विक्षिप्तचित्तैरपि पेककार ।[3]
ते सर्वि प्राप्ता इममग्रबोधिम् ।
सुगतान तेषां तद तस्मि काले ।
परिनिर्वृतानामथ तिष्ठता वा ।
ये धर्मनामापि शृणूषु[4] सत्वाः ।
ते सर्वि बोधाय अभूषि लाभिन ' इति ॥

महाकरुणासूत्रेऽप्युक्त[5] ॥

तद्यथा बाडिशिकेन महत्युदकसरसि मत्स्याकर्षणार्थं सामिषं बडिशं प्रक्षिप्तं भवेत्समनन्तरप्रक्षिप्तं च मत्स्येन निगीर्णं भवेत् । किं चापि स मत्स्य उदकसरसि चरत्यथ च पुनर्बद्ध एव स वक्तव्यो दृढेन सूत्रेण स्थलगतदण्डसुनिबद्धेन । यतस्तं बाडिशिक आगत्य तेन सूत्रलाघवेन जानाति ' गृहीतो मत्स्य इति । तमेन सूत्राद्गृहीत्वा स्थलगतं क

1) te W

2) Here both MSS read avan° in W anam° is corrected (a sec manu) to avan°.

3) vacā A

4) çrunotsu (?) W The form kri lishu above (92 12) is somewhat similar

5) No doubt the Mahakaruṇā puṇḍarika sūtra Compare Nanjio 117, (where the Chinese title is similarly abbreviated) 180 (tr before AD 431), K.F 230, M Vyutp LXV 23

रोति यथावासमन्वाहरणाय परिभोगाय। एवमेव ये सत्वा बुद्धेषु भगवत्सु चित्तं प्रसाद्य कुशलमूलमवरोपयन्ति, अन्तश एकचित्तप्रसादमपि। किं चापि ते सत्वा दुष्कृतेन कर्मावरणेनापायेषूपपन्ना भवन्त्यथ च बुद्धा भगवन्तस्तान्सत्वान् बौद्धेन ज्ञानेन समन्वाहरन्तः स्मृतिसूत्रेण[1] गृहीत्वा संसारोदकसरस उद्धृत्य निर्वाणस्थले स्थापयन्तीति॥

तस्मादेषु शास्तृसंज्ञा कार्या, वन्दमानाश्च मनसा वन्दितव्याः। भवति हि नवकोऽपि बोधिचित्तबलाद्वन्द्यो, यथा मैत्रेण[2] द्रमिडेन महाबोधिसत्वेनापि सता नवकः श्रेष्ठिसुधनः सर्वशरीरेण प्रणिपत्य वन्दितः। नियतार्थं चेदं। यथाध्याशयसंचोदनादिषु सर्वबोधिसत्वयानिकपुद्गलनमस्कारो ऽनुज्ञातव्यः, [3]सर्वशब्देनात्मनोऽपि ग्रहणात्[3]। कायमेकत्र वन्द्य[52 b]मन्यत्र न विरुध्यते, परस्परं वन्द्यत्वेनालम्बनात्। यत एवानास्वादनादपुण्याभावः। किं च बुद्धानामप्येवमिष्यते। मा भूदनवस्था। एकस्य चान्यूनतेति॥

आर्यसर्वधर्मवैपुल्यसंग्रहसूत्रेऽप्ययमर्थ उक्तः। सूक्ष्मं हि मञ्जुश्रीः सद्धर्मप्रतिक्षेपकर्मावरणं, यो हि कश्चिन्मञ्जुश्रीस्तथागतभाषिते धर्मे कस्मिंश्चिच्छोभनसंज्ञां करोति। क्वचिदशोभनसंज्ञां स सद्धर्मं प्रतिक्षिपति। तेन सद्धर्मं प्रतिक्षिपता तथागतो ऽभ्याख्यातो भवति। धर्मः प्रतिक्षिप्तो भवति, संघो ऽपवादितो भवति। य एवं वदतीदं युक्तमिदमयुक्तमिति स सद्धर्मं प्रतिक्षिपति। न मया पृथक्कश्चिद्धर्मः श्रावकयानसंप्रयुक्तः प्रत्येकबुद्धयानसंप्रयुक्तो महायानसंप्रयुक्तो देशितः। तत्ते मोघपुरुषा इमं मम धर्मं नानाकरिष्यन्ति। इदं श्रावकाणां देशितमिदं प्रत्येकबुद्धानामिदं बोधिसत्वानामिति। स नानात्वसंज्ञया सद्धर्मं प्रतिक्षिपति। इयं बोधिसत्वस्य शिक्षा। इयं बोधिसत्वस्याशिक्षेति सद्धर्मं प्रतिक्षिपति। धर्मभाणकस्यास्ति प्रतिभानं नास्ति प्रतिभानमिति सद्धर्मं प्रतिक्षिपति। धर्मं धर्मतया न

---

1) Cf. Dh. s. § 19 and p. 39.

2) This refers to the passage of the Gaṇḍavyūha already cited at 36. 14 above. See note there.

3) This clause is added a sec. manu.

यति[1] सद्धर्मं प्रतिक्षिपति । अपगते बुद्धोत्पादे नास्ति धारणीप्रतिलम्भ इति धर्मं प्रतिक्षिपति । नास्ति धर्मभाणकस्य धारणीप्रतिलम्भ इति धर्मं प्रतिक्षिपति । धर्मभाणकस्य चर्यां दूषयति धर्मं प्रतिक्षिपति । धर्मभाणको न प्रतिपत्तिसंपन्न इति धर्मं प्रतिक्षिपति । प्रमादेनैनं चोदयति सद्धर्मं प्रतिक्षिपति । ईर्यापथेन चोदयति सद्धर्मं प्रतिक्षिपति । अक्षरचर्यया[2] शीलविपत्त्या चोदयति धर्मं प्रतिक्षिपति । प्रति(53 a)भानेन[3] संवादयतीति धर्मं प्रतिक्षिपति । आलोको ऽस्य धर्माणां न सुविदित इति धर्मं प्रतिक्षिपति । गत्येन गत्यमबुध्यमानः प्रतिवदतीति धर्मं प्रतिक्षिपति । अक्षरसंज्ञया तथागतशासनं नावगाहत इति धर्मं प्रतिक्षिपति । सूत्रेण सूत्रं विरोधयतीति धर्मं प्रतिक्षिपति । गाथया गाथां विरोधयतीति धर्मं प्रतिक्षिपति । अक्षरशुद्धया कस्यचिदधिमुक्तं करोति कस्यचिन्न करोतीति धर्मं प्रतिक्षिपति । धर्मभाणकस्यार्थस्य तथागताभिनामयतीति धर्मं प्रतिक्षिपति । विघ्नतुः कर्मास्य करोति धर्मं प्रतिक्षिपति । संलापयन् वदतीति धर्मं प्रतिक्षिपति । इहास्यास्ति चर्या इहास्य नास्ति चर्येति धर्मं प्रतिक्षिपति । इदं सूक्तमिदमसूक्तमिति धर्मं प्रतिक्षिपति । अनेन नास्ति चर्येति धर्मं प्रतिक्षिपति । अनेन बुद्धवचनसमय उक्तो नानेन बुद्धवचनसमय उक्त इति धर्मं प्रतिक्षिपति इति हि मञ्जुश्रीर्यावत् कश्चिद्विलोमयति तावद्धर्मं प्रतिक्षिपति । धर्मभाणकस्येदं दूषणमिति चिन्तयति वदति भिक्षुर्वा भिक्षुणी वा उपासको वा उपासिका वा । सर्वः स सद्धर्मं प्रतिक्षिपतीत्यादि ॥

अत्रैव चोक्तं । यस्य कस्यचित् कुलपुत्र तथागतस्य परिनिर्वृतस्य धर्मः प्रतिभाति सत्वाधिमुक्तानां सत्वानां देशयितुं । तस्याः च पर्षदि यद्यपि तस्याचरस्यापि दूतरोमहर्षो न वेदितानुपातो वा सर्वः स तथागतानुज्ञानेन । तत्र गोत्सुलया अज्ञोधिसत्वा बोधिसत्वप्रतिज्ञा बोधिसत्वदूषका धर्मस्तैन्यकुहका एवं वदयन्ति धर्मोपदेशकेभ्यः । प्रतिभाति । न बुध्यत इति ॥

---

1) A marginal gloss, apparently on this word, adds *tacchāsanapratyayo rucanam sarvadharma çravyatvāt*

2) *akṣarapāṭhako 'yam nārthapāṭhako 'sti* marg.

3) *vyañjanārthakālatvāt sarva* marg.